॥ श्रीः ॥

# शाक्तप्रमोदः ।

काली, तारा, त्रिपुरसुन्दरी, भुवनेश्वरी, छिन्नमस्ता, त्रिपुर-
भैरवी, धूमावती, बगलामुखी, मातङ्गी, कमलात्मिके-
तिदशमहाविद्यातन्त्रात्मकः,
कुमारीतन्त्रेण च, दुर्गा, शिव, गणेश, सूर्य,
विष्णूनां पंचायतनदेवतानां तन्त्रैश्च
समलंकृतः ।

शिवहरराजधानीराजभिः

श्रीराजदेवनन्दनसिंहबहादुरनराधिपैः

संगृह्य विरचितः

तद्गुरुवंश्यपण्डितश्रीरघुराजदुबेजीद्वारा

संशोधितः ।

सोयं

खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये

मुद्रयित्वा प्रकाशितः ।

वैशाख संवत् १९६२, शके १८२७.

श्रीगणेशाय नमः ।

# विज्ञापन ।

मैं श्रीराजदेवनन्दनसिंह बहादुर मालिक राजधानी शिवहर जिले मुजफ्फरपुरने श्रीकाली तारा इत्यादि दशों महाविद्या और सूर्य गणेश इत्यादि देवताओंको प्रणाम करके इस ग्रन्थको बहुत परिश्रमके साथ अनेक तन्त्र व पुराणोंसे संग्रह किया और इस ग्रन्थ बनानेका कारण यह है कि मुझको और दूसरे २ शाक्तजनोंको पूजादिकके समय इन विषयोंकी आवश्यकता पडतीथी और समयपर प्राप्ति होना इनका कठिनथा और जिन लोकोंके पास यत्किञ्चित् थाभी तो अशुद्ध और गोपनीय इत्यादि वचनके कारण किसी दूसरेको देते नहीं परन्तु मैंने यह विचार किया कि इससे यह विषय लुप्त होजायगा और इसरीतिकी पुस्तक कोई महाशयोंकेपास देखीभी नहीं गई इसकारण सर्व्वशाक्तोंके उपकारहेतु इन विषयोंको संग्रहकर श्रीपण्डित रघुराजदुबेजी जो कि हमारे गुरुवंशसे हैं शुद्धकरा शाक्तप्रमोदनाम रख मुंबईमें श्रीकृष्णदासात्मज खेमराज इन्होंके समीप मुद्रित करानेके अर्थ भेज दियाहै सो आज सर्व्व देवताओंके प्रसादसे छपके तैयार हुआहै अब सर्व्वविद्वज्जनोंको चाहिए कि प्रतिष्ठापूर्वक इस ग्रन्थको कृपादृष्टिसे देखैं और नीचे अपनी वंशावली लिखताहूं कि वृत्तान्त कुलका प्रगटहो.

श्रीराजदेवनंदनसिंह--बहादुरशिवहर--जिला मुजफ्फरपुर.

राजकुमार बाबू लक्ष्मीनंदनसिंह

राजा शिवराजनंदन सिंहबहादुर

राजकुमार बाबू रुद्रराजनन्दनसिंह

राजकुमार बाबू वैद्यनाथ नंदनसिंह

राजा शिवनन्दनसिंह बहादुर

राजकुमार बाबू राजनंदनसिंह

राजा देवनन्दनसिंहबहादुर

राजकुमार बाबू यदुनन्दनसिंह

राजा रघुनंदनसिंह बहादुर

राजकुमार बाबू बृजनंदनसिंह

राजकुमार बाबू रामनन्दनसिंह

राजकुमार बाबू गिरिजानंदनसिंह

राजकुमार बाबू शंकरनंदनसिंह

राजा दुष्टदमनसिंह बहादुर

राजकुमार बाबू देवकीनन्दनसिंह

राजकुमार बाबू स्यामनंदनसिंह

राजकुमार हरनन्दनसिंह

राजकुमार बाबू राधामोहनसिंह

राजा श्रीकृष्णसिंह बहादुर

राजकुमार बाबू गौरीनाथ सिंह

राजकुमार बाबू रघुवरनारायणसिंह

राजकुमार बाबू विष्णुप्रकाशनारायणसिंह

राजकुमार बाबू तिलकधारीसिंह

राजकुमार बाबू पृथ्वीसिंह

राजा ध्रुवसिंह बहादुर

राजा गंगाप्रसाद सिंह

राजा दीनदयाल सिंह

महाराज हरीन्द्रकिशोर सिंहबहादुर

राजकुमार बाबू दुर्गाप्रसादसिंह

राजकुमार बाबू हरप्रसाद सिंह

राजकुमार बाबू अवधूत सिंह

राजा दिलीपसिंह बहादुर

राजा जुगलकिशोर सिंहबहादुर

महाराजकुमार बाबू महेंद्रकिशोरसिंह बहादुर

महाराज गजेंद्रकिशोर सिंहबहादुर

राजकुमार बाबू राजसिंह

राजकुमार बाबू सत्राजितसिंह

राजा गजसिंह बहादुर

राजा वीरकिशोर सिंहबहादुर

महाराज नवलकिशोर सिंहबहादुर

राजकुमार बाबू महादेवदत्तसिंह

राजकुमार बाबू महादेव कुमारसिंह

राजा उग्रसेनसिंह बहादुर

राजकुमार बाबू शिवनाथ सिंह

महाराज अनंदकिशोर सिंहबहादुर

श्रीः ।

# विज्ञप्तिः ।

अद्य खलु सकलभूतलनिवासिनामार्यजनानां पुरतःकिञ्चिद्विज्ञापनं लिखितुमस्मदीयं मनोऽतितरामानन्दमाधत्ते—प्रवर्तयति च सत्परिश्रमाभिनन्दनाय । तत्किमपि कथमपि वर्ण्यमानममुं प्रार्थनाञ्जलिं निजसपर्यायै समभिनन्दन्तु सभ्यजनाः ।
भोः ! विद्वांसो महाप्राज्ञाः ! संप्रति ह्यस्मिन्प्रकृष्टप्रादुर्भावे आर्यदेशे प्राचीनमहानुभावमहर्षिजनानुष्ठितानुष्ठापितसनातनवेदधर्मप्रथाऽनेकधा प्रवितता एकशैलसमुत्पन्ननानानदीवत्समन्ततो व्याप्तबहुलप्रदेशा अंते च समुद्रमिव परमेष्ठप्राप्तव्यं प्रतिलंभते—इति हि विचारान्ते निखिलविचक्षणजनानां प्रत्यक्षं स्यात् ।

तत्र च प्रकृतमनुरुन्ध्महि—अस्मिन्भरतवर्षे प्राधान्येन वैदिको धर्म एवासीत् । ततश्च कियता समतीतेन समयेन नानाविधाः जैनबौद्धादयः धर्मा वैदिकधर्मप्रचारविदूषका नष्टदृष्टिभिरयथातत्त्वदर्शिभिः केवलं दयामुखैर्महानिर्दयैर्मनुष्यापसदैरादृताः कालदोषेण प्रसिद्धिमाययुः—येषां दुष्टधर्माणां शुष्कविरक्तिवादनिरन्तरघोषणेन जातबुद्धिसंस्काराणां भारतीयप्रजानां दृढसाहसिकमनोबन्धनानि शिथिलीकृतानि—येनच मनोबन्धशिथिलीकरणेन प्रतिविचारं औदासीन्यमेव प्रायो भारतीयजनानामाश्रयप्रासादो बोभवीति—अतएव च विप्रकृष्टनिकृष्टजनैर्गारुडैर्महाविषाः पन्नगा इव क्रीडोपकरणीकृताः खलु भारतीयाः! अयं महाननर्थः, जैनबौद्धादिमहापाषण्डधर्मकृतः इति सुतरां भारतीया अनुमिन्वन्तु ।

वैदिकधर्मश्च त्रेधा—सात्विको राजसस्तामसश्चेति । स त्रिविधोऽपि द्विविधः—आभ्यन्तरो बाह्यश्च । आभ्यन्तरश्च स्वमनोव्यापाररूपः । बाह्यः इतरेन्द्रियवृत्तिकृतव्यापाररूपः । तत्र लोकवृत्तिः बाह्यधर्मे आभ्यन्तरधर्मे च परिणिष्ठितास्ति । तच्चेत्थं—सकलजगदुत्पादकस्य निजमहानन्दैकमूर्तेः सच्चिदानन्दरूपस्य अनिर्वचनीयाचिंत्यगुणगणस्य अप्रच्युतिस्वभावस्य परमात्मनो निजाभिन्नापरिमेयशक्तिविरचितनिखिलब्रह्माण्डकोटिपरम्परा सृष्टिस्थितिसंहारकारिणी सत्त्वरजस्तमोगुणजननी भगवती योगमाया आदिशक्तिः दृश्यज्ञेयादिस्वरूपम् इदं जगत् समुत्पाद्य तस्मिन्निजलीलया नानाविधचरित्राणि विधाय भगवति सर्वेश्वरे सदा रमते ।

भगवांश्च तयैव योगमायया निर्गुणोऽपि स्वयं गुणवानिव साक्षितया सर्वं तच्चरितं समनुमोदते कान्त इव कान्ताकृतां कन्दुकलीलाम् ।

एतादृशगुणवैभवयोर्मायापरमपुरुषयोरादिमायासृष्टगुणत्रयकार्यभूते जगति जायमानानां त्रिविधानां जनानां स्वस्वगुणभावितदैहिकमानसिकवृत्तीनां तत्तद्गुणभाविताप्रमपुरुषयोग-मायारूपा परमेष्टदेवता तत्तद्गुणसामग्र्या समाराधनीयतया विधीयते नत्वन्यान्यप्रकृतीना-मन्यान्यदेवतान्यान्यसामग्र्या । यथा नीलपीतादिकाचदत्तदृष्टीनां तत्तद्वर्णदृश्यद्रव्यप्र-काशो दरीदृश्यते न त्वितरः । एवं रीत्याऽयं वैदिको धर्मः अनन्तकालतोऽस्मिन्नार्यभूम-ण्डले प्रचारातिभूमिं गतः सर्वान्धर्मिष्ठजनानभीष्टफलप्रदानेन कृतार्थयतीति बहु भागधेयं मन्ये वैदिकधर्मानुयायिनाम् ।

तत्र च प्रकृतं किञ्चिद्विचार्यते—वैदिका नाम वेदचतुष्टयप्रोक्ताः इतिहासपुराणप्रोक्ताश्च । इतिहासपुराणयोर्वेदत्वं च—

"इतिहासपुराणानि पञ्चमो वेद उच्यते"

इत्यादिवचनकदम्बात् । इतिहासान्तःकोटिप्रविष्टान्येव हि तन्त्राणि । तेषामपीतिहा-सत्वात् । 'इतिहासः पुरावृत्तम्' इत्याभिधानिकवचनात् । तन्त्रेष्वपि पुरावृत्तस्यैव संवा-दादिरूपेण सत्त्वात् एवं च तान्त्रिकधर्माणामपि वैदिकधर्मत्वं सिद्धम् ।

तत्र च इदं ("शाक्तप्रमोद") नामकं पुस्तकं नानाविधतन्त्रेभ्यः समुद्धृतं व्यवस्थया चानुक्रमितम् ।

अयं ( शाक्तप्रमोदः )—शक्तिर्देवता येषां ते शाक्ताः शाक्ताः प्रमोदन्ते यस्मात्सः शाक्त-प्रमोदः शाक्तजनानन्ददायक इत्यर्थः । अनेन च केवलं शक्तिपूजकानामेवायम् आनंददायक इत्येवार्थ इति न भ्रमितव्यम् । किंतु अस्य ग्रन्थस्य अंतिमे भागे दुर्गा—शिव—गणेश—सूर्य—विष्णूनां तन्त्राणि दृश्यन्ते । अतः सर्वेषां शाक्त—शैव—गाणपत्य—सौर—वैष्णवाना-मप्ययमानन्ददायक एवास्ति ।

अयं च ग्रन्थः श्रीशिवहरराजधानीनरेन्द्रैः श्रीमन्महाराजश्रीराजादेवनन्दनसिंह-बहादुराभिधानैः महाप्रयासेन नानातन्त्राणि संगृह्य तेभ्यस्तन्त्रेभ्यः दशमहाविद्यानां ( काली—तारा—त्रिपुरसुन्दरी—भुवनेश्वरी—छिन्नमस्ता—त्रिपुरभैरवी—धूमावती—बगलामु-खी—मातङ्गी—कमलात्मिकानां दशशक्तीनां ) तन्त्राणि समुद्धृतानि । तथाच ( दुर्गा—शिव—गणेश—सूर्य—विष्णूनाम् ) पंचायतनदेवतानां तन्त्राणि समुद्धृतानि । तेषुच सर्वेषु तन्त्रेषु—तत्तद्देवतायाः ध्यानं—यन्त्रोद्धारः—मन्त्रोद्धारः—पूजाविधिः—स्तोत्रं—कवचं—हृदयम्—उपनिषत्—शतनाम—सहस्रनाम इत्येतानि दशदश अंगानि सन्ति । कुमारी-तन्त्रं—बलिप्रदानं हवननिर्णयश्च सम्यगत्र निवेशितो वर्तते । एवं सर्वांगपरिपूरि-तोऽयं ग्रन्थः पूर्वोक्तमहाराजैः सर्ववैदिकधर्मावलंबिजनानां हितार्थाय समग्रतया संकलितः ।

अस्मिन्भूमण्डले संप्रति एतादृशपरहितकारिणो जना विरलाः संति । पश्यन्तु वि-द्वांसः ! अयं वैदिकधर्मश्च यत्रतत्र उत्तरोत्तरं ह्रस्यमान एव दृश्यते नतु क्वचित् वृद्धिं गतः । अत्र हेतुं तु तावत्पश्यामो निश्चिनुयामश्च धर्मवृद्धिमूलं तावद्ब्राह्मणाः, तेच ब्राह्मणाः प्रायशोऽस्मिन्काले लोभग्रहग्रस्ता वेदेषु वैश्यवृत्तय एव केवलं दृश्यंते नतु परमार्थदृष्टयो बह्वः । तेषां च लोभिष्ठतया सनातनधर्मस्यापि यथावकाशं संकोचेन धर्मग्रंथानामपि यावत्प्रयोजनं संग्रहकरणेन बहवश्च ग्रंथाः लेखनादिपरिपाटीविरहिता नष्टप्राया इव भवंति । तत्प्रजानां च निजपूर्वजसंपादितानामेव ग्रंथानाम् अध्ययने कालो न लभ्यते किं पुनरन्यसंग्रहे । एवं परंपरया नष्टेषु ग्रंथसंग्रहेषु का कथा खलु प्राचीनधर्मनिर्णये ? इममेव वैदिकधर्मह्रसहेतुं पश्यामः । अथान्यच्चात्र ब्रूमहे--अस्मिञ्जगति सर्वजगन्निर्वाहाय वर्णाश्रमव्यवस्था कृतास्ति । तत्र च ब्राह्मण--क्षत्रिय--वैश्य- शूद्राः एते चत्वारो वर्णाः । ब्रह्मचर्य--गार्हस्थ्य--वानप्रस्थ--संन्यासाः एते चत्वार आश्रमाः कल्पिताः । तत्र ब्राह्मणादीनां वर्णानां ब्रह्मचर्याद्या आश्रमधर्माः करणीयतया [illegible]शिष्टाः श्रुतिस्मृत्यादीश्वराज्ञारूपधर्मशास्त्रेण । तादृशधर्मपालनम् ईश्वरानुज्ञा तन्मनुष्याणां सर्वकर्त्तव्यशिरोधार्यतयाऽत्यन्तादरणीयं खलु ॥ उक्तं च पराशरस्मृतौ--

**चतुर्णामपि वर्णानामाचारो धर्मपालनम् ॥**
**आचारहीनदेहानां भवेद्धर्मः पराङ्मुखः॥१॥इति॥**

तत्र चैवं प्रस्तूयते--संप्रति हि प्रायः ब्राह्मणानाम अवश्यकर्त्तव्यानि अध्ययनम् अध्यापनं, यजनं, याजनं, दानं, प्रतिग्रहः एतानि षट्कर्माणि यथाशास्त्रं यथेश्वरानुज्ञानं न भवंति । केषुचिन्मध्योत्तरगुर्जरप्रभृतिदेशेषु तु संध्यानामापि क्वचित्क्वाचित्र श्रूयते । का नाम गायत्री! । अस्माकं प्रपितामहाः संध्यामकुर्वंस्ततो वयं ब्राह्मणा इति ब्रुवते । केवलं चिह्नभूतेन यज्ञोपवीतेनैव षष्ठे कर्मणि प्रतिग्रहे अधिकारिणः परिदृश्यंते । अहह कियानयं धर्मह्रासः! । येषां गोत्रपुरुषाः वसिष्ठगौतमादयः महर्षयः परावरदृशः धर्मशास्त्राण्यकुर्वन् ते सन्ध्यामपि न जानंति दूरे सकलस्वधर्मानुष्ठानकथाकन्था। किमेतत्कलिकालकौतुकम् !!!

पूर्वोक्तमहाराजानां च एतद्ग्रन्थसंग्रहे तन्त्रपुस्तकावचयने च अनुभूतमेवासीत् । यत एकमपि तन्त्रं समग्रतया कुतश्चन न लब्धम् । किंतु एकत एकमपरतोऽपरमिति हैमनीयपुष्पावचयनवत् संग्रहेऽतिप्रयासोऽभूत् । एवं हि भारतीयदशा संवृत्तास्ति । अस्तु ।

महाराजानां श्रीराजदेवनन्दनसिंहानाम् एतद्ग्रन्थस्य संग्रहणे यः प्रयासः सच्च सकललोकानां हितकारी खलु । अतस्तेन प्रयासेन महाराजानाम् अस्मिन्नार्यमण्डले धवलं

यशश्चिरकालपर्यन्तं भविष्यति । अनेन प्रयासेन सुखं परमैश्वर्यं चाप्नुवन्तु महाराजा इत्याशास्महे । श्रीमन्महाराजैः अस्य ग्रन्थस्य प्रतितंत्रं पुनर्मुद्रणाद्यधिकारः उदारबुद्धयाऽस्मभ्यं दत्तोस्ति । अतस्तेभ्यः श्रीमहाराजेभ्यः संतु सहस्रान्ता धन्यवादाः ।

अपरं च ग्रंथं ( श्रीशाक्तप्रमोदं ) दृष्ट्वा सर्व्वेपि भारतीया जना एतदुक्तप्रकारेणेष्टदेवताराधनेन स्वेष्टफलावाप्तिपूर्वकं सकलैहिकामुष्मिकसुखमनुभविष्यन्ति ।

एतद्ग्रन्थस्य शोधकाश्च श्रीरघुराजदुबेजीसमभिधाः महाराजानां गुरुवंश्यास्तेषामपि अस्मिन्सत्कर्मण्यभिरुचिः सर्वतोऽभिनंदनीया ।

अयमेतादृशो ग्रन्थः सकलजगत्प्रसिद्धो भवत्वेतदर्थं पाठकवर्यश्रीकेशवचंद्राभिधानैः अयं ग्रंथः--मुंबय्याम् अस्मत्समीपे मुद्रयित्वा प्रकाशाय प्रेषितः । सर्वतः श्लाघ्यत एव सदुपक्रमः ।

सोऽयं ( शाक्तप्रमोदः ) अस्माभिः स्वकीये " श्रीवेङ्कटेश्वरा " ख्ये मुद्रणालये खानदेशीयरावेरग्रामनिवासिपरशुरामभट्टतनयगोविन्दशर्मशास्त्रिद्वारा संशोध्य प्रथमं मुद्रयित्वा प्रकाशमानीत आसीत् । एवमेव द्वितीया तृतीयाऽऽवृत्तिरपि मुद्रिताऽऽसीत् । तत्र तानि सर्वाणि पुस्तकानि शक्तिभक्तिमद्भिर्जनैः सर्वतः संग्रहीतानि बहुभिश्च भूयोभूय एतत्पुस्तकलाभाय सूचनाऽकारि । अतस्तस्यचेयं चतुर्थाऽऽवृत्तिः संप्रति पण्डितनन्दलालशास्त्रि द्वारा विशेषतः संशोध्य परिष्कृत्य च मुद्रयित्वा प्रकाशितास्ति ॥

अत्र अक्षरयोजकयोजिताक्षराणां विपर्यासादिजनितानामशुद्धानां मनुष्यानिष्ठनैसर्गिकभ्रमप्रमादयोर्दुःपरिहरत्वात्क्षन्तव्यः स्वल्पापराधः ।

विज्ञापयामश्च सर्वान् शाक्त--शैव--गाणपत्य--सौर-वैष्णवान् विद्वज्जनान् अस्य अमूल्यस्य ग्रंथरत्नस्य संग्रहेण कृतार्थयन्तु आत्मनो जन्म विधिवत् स्वेष्टदेवतासमाराधनेनेति ।



अमूल्यस्याप्यस्य ग्रंथस्य सर्वसाधारणजनजिघृक्षानुजिघृक्षा मूल्यम् अतिस्वल्पमेव केवलं नयव्यय ( पोष्टखर्च ) सहितं ( ५ ) पञ्च मुद्रापरिमितं स्थापितमस्ति ।

खेमराज श्रीकृष्णदास,

अध्यक्ष "श्रीवेङ्कटेश्वर" ( स्टीम् ) प्रेस बंबई.

श्रीः ।

# अथ शाक्तप्रमोदस्थविषयानुक्रमणिकाप्रारम्भः ।

इति शाक्तप्रमोदस्थविषयानुक्रमणिका.

श्रीः ।

शिवहरराजधानीपति-

श्रीराजादेवनन्दनसिंहबहादूरनराधिप-

संगृहीतविरचित-

# शाक्तप्रमोदान्तर्गतं

प्रथमं

# कालीतन्त्रम् ।

---

उक्तराजगुरुवंश्यपण्डितश्रीरघुवंश-

दुबेजीद्वारा संशोधितम् ।

---

तदेतत्


खेमराज श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) यन्त्रागारे

मुद्रयित्वा प्रकाशितम् ।

---

तृतीयावृत्तिः


---

श्रीगणेशाय नमः ।

# अथ शाक्तप्रमोदः ।

नत्वा कालीङ्कपार्द्राङ्कलिकलुषहराङ्कोमलाङ्कान्तदेहाङ्कुर्व्वे शाक्तप्रमोदं सुकृतसुमतिदं शोभनं सज्जनानाम् ॥ शक्तीनां सत्सपर्य्यादिकमिह गदितन्तत्समन्त्रन्दशानाम्पञ्चानान्देवता-नामपि तदखिलकङ्खण्डनन्दुर्म्मतीनाम् ॥ १ ॥

## अथ श्रीकालीध्यानम् ।

शवारूढाम्महाभीमाङ्घोरदंष्ट्रां हसन्मुखीम् ॥ चतुर्भुजाङ्खड्गमुण्ड वराभयकरां शिवाम् ॥ १ ॥ मुण्डमालाधरान्देवीं ललज्जिह्वान्दिगम्बराम् ॥ एवं सञ्चिन्तयेत्कालीं श्मशानालयवासिनीम् ॥२॥

## अथ यन्त्रोद्धारः ।

आदौ त्रिकोणमालिख्य त्रिकोणन्तद्बहिर्लिखेत् ॥ ततो वै विलिखेन्मन्त्री त्रिकोणत्रयमुत्तमम् ॥ १ ॥ ततस्त्रिवृत्तमालिख्य लिखेदष्टदलं ततः॥वृत्तं विलिख्य विधिवल्लिखेद्भूपुरमेककम्॥२॥

## अथ मन्त्रोद्धारः ।

कालीबीजत्रयम्प्रोक्ता लज्जाबीजद्वयन्ततः ॥ हूँकारौद्वौततःपश्चाद्दक्षिणेकालिकेततः ॥ १ ॥ कालीबीजत्रयन्तस्माल्लज्जाबीजद्वयम्पठेत् ॥ द्वौचस्वाहान्तहूङ्कारौकालीमन्त्रउदाहृतः ॥ २ ॥

## अथ मन्त्रः ।

क्रींक्रींक्रींह्रींह्रीं हूँहूँ दक्षिणे कालिके क्रीं ३ ह्रीं २ हूँ२ स्वाहा ॥

## अथ श्रीदक्षिणकालीसपर्य्यापद्धतिः ।

प्रथमम्पञ्चवर्णरजश्चित्रं शुद्धं स्थानं गत्वा पूजावेद्या बहिस्स्थित्वा गुरुम्प्रणम्य इष्टदेवताम्प्रणम्य दिक्पालांश्च प्रणम्य आचान्तः कुशहस्तो मौनी पापशमनार्थं श्लोकद्वयम्पठेत् तद्यथा "ॐ देवि त्वत्प्रकृतश्चित्तम्पापाक्रान्तमभून्मम ॥ तन्निस्सरतु चित्तान्मे पापं हूंफट्चते नमः ॥१॥ सूर्य्यस्सोमो यमःकालो महाभूतानि पञ्च च ॥ एते शुभाशुभस्येह कर्म्मणो नव साक्षिणः " इति पठित्वा सम्प्रार्थ्य गृहे प्रविशेत् । मौनी मूलेनाचम्य

"ॐ वज्रोदके हूं फट् स्वाहा" इति जलं गृहीत्वा "हूं स्वाहा" इति करे आदाय " ॐ ह्रीं विशुद्धसर्व्वपापानि शमयाशेषविकल्पमपनय हूं फट् स्वाहा" इत्यनेन पादौ प्रक्षाल्य " ॐ ह्रीं स्वाहा " इति पुनराचम्य "ऐं कालिकायै नमः, ऐं कपालिन्यै नमः, ऐं कुल्लायै नमः" इति त्रिराचम्य ततो मूलेन हस्तौ प्रक्षाल्य " ॐ कालिकायै नमः। ॐ कपालिन्यै नमः" इति दशहस्ताङ्गुलीभिरोष्ठौ द्विरुन्मृज्य "ॐ कुल्लायै नमः" इति करं प्रक्षाल्य मूलेन सङ्कुचिताङ्गुलीभिर्म्मुखं तर्ज्जन्यङ्गुष्ठाभ्यां नासिकां मूलेन अनामिकाङ्गुष्ठाभ्यां कर्णमङ्गुष्ठकनिष्ठाभ्यान्नाभिन्तलेन हृदयं सर्व्वाङ्गुलीभिर्मस्तकं भुजौ च स्पृशेत्। ततस्तिलकङ्कुलचन्दनादिना ललाटोदरहृत्कण्ठदक्षपार्श्वांसकण्ठपृष्ठककुदि भुजद्वन्द्वे मूर्द्धनि द्वादशस्वपि स्थानेषु कुर्य्यात् ॥ ततो "देव्यस्त्रव्विँलिखेद्भाले कालीबीजन्ततो हृदि ॥ शक्तिम्मध्यगताङ्कृत्वा कूर्च्चबीजन्न्यसेत्सुधीः" ततः सामान्यार्घ्यस्थापनङ्कुर्य्यात्॥ तद्यथा स्ववामे त्रिकोणवृत्तभूपुरात्मकम्मण्डलव्विँलिख्य ततः "ॐ आधारशक्तिभ्यो नमः" इति पुष्पाक्षतादिभिरभ्यर्च्य "ॐ ह्रः द्वारार्घ्यं साधयामि" इत्युक्त्वा " फट्" इति प्रक्षालितं शङ्खादिपात्रन्त्रिपादिकोपरि निधाय "नमः" इति जलेनापूर्य्य "गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्म्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिङ्कुरु " इति मन्त्रेणाङ्कुशमुद्रया सूर्य्यमण्डलात्तीर्थन्तज्जले आवाह्य, गन्धादिकम्प्रणवेन निःक्षिप्य, धेनुमत्स्यमुद्रे दर्शयित्वा, प्रणवेनाष्टशो दशकृत्वो वाभिमन्त्र्य फडिति मन्त्रेण द्वारमभिषेचयेत् " ॐ मणिधरिणि वज्रिणि शिखरिणि सर्व्वलोकवशङ्करि हूँ फट् स्वाहा" इति शिखाम्बध्नीयात् ॥ ततो द्वारदेवताः पूजयेत "गं गणेशाय नमः, वं बटुकाय नमः, क्षं क्षेत्रेशाय नमः, यं योगिनीभ्यो नमः " इति ऊर्ध्वे वामे दक्षे अध इति चतु-

दिक्षु पूजयेत् " गंगङ्गायैनमः, यं यमुनायै नमः" इतिशाखा पार्श्वयोः "लंलक्ष्म्यैनमः, संसरस्वत्यैनमः" इतिऊर्ध्वेअधश्चपू जयेत् ॥ "ॐब्रह्माण्याद्यष्टमातृभ्योनमः" इतिदेहल्याम् गन्ध पुष्पादिनाभ्यर्च्च्यंततोदक्षिणाङ्गंसङ्कोचयन् दक्षचरणमग्रेनिधा- यवामशाखामस्पृशन् मण्डलाभ्यन्तरे गत्वा " ॐरक्षरक्षहूँफट् स्वाहा" इतिजलेनाभिषिच्य " ॐपवित्रवज्रभूमेहूँफट्स्वाहा" इत्यभिमन्त्र्य "ह्रींआधारशक्तिकमलासनायनमः" इत्यासन- मभ्यर्च्यत्रिकोणव्विँलिख्य " आसुरेखेवज्रेरेखेहूँफट्स्वाहा " इतिमण्डलव्विँलिख्यतत्र " ह्सौं " इतिप्रेतबीजँव्विलिख्य" ह्रीं आधारशक्तिकमलासनायनमः" इत्यासनमभ्यर्च्च्य" ॐअन न्तायनमः, विमलासनायमनः, पद्मासनायनमः " इतिकुशा नास्तीर्य्यव्याघ्राजिनङ्कृष्णसारमृगाजिनङ्कम्बलासनव्वाँप्रकल्प येत् ॥ तदभावेतुपञ्चविंशतिकुशनिर्म्मितविष्टरं शवरूपव्वाँप्रक ल्पयेत् " ह्सौंमहाप्रेतपद्मासनायनमः " इत्यभ्यर्च्य तत्रास ने आत्ममन्त्रेणउपविश्यवामोरूपरिदक्षिणपादङ्कृत्वाबद्धवीरा सनःवामपादोपरिदक्षिणोरुन्धृत्वाविपरीतव्वाँपूर्व्वाभिमुख उत्त राभिमुखोवाआसनन्धृत्वामन्त्रम्पठेत् ॥ आसनमन्त्रस्यमेरुपृष्ठ ऋषिःसुतलञ्छन्दःकूर्म्मोदेवताआसनपरिग्रहे विनियोगः"ॐ पृथिवित्वयाधृतालोकादेवित्वँव्विष्णुनाधृता ॥त्वञ्चधारयमान्नित्य म्पवित्रङ्कुरुचासनम्" इति " ॐ वास्तुपुरुषायनमः, ॐब्र- ह्मणेनमः "इतिनैर्ऋत्येसम्पूज्य " ॐ धर्म्मायनमः, ॐ ज्ञाना यनमः, ॐ वैराग्यायनमः, ॐ ऐश्वर्य्यायनमः " इतिदिक्षुसम्पू ज्य"ॐ अधर्म्मायनमः , ॐ अवैराग्यायनमः, ॐ अनैश्वर्य्या यनमः" इतिविदिक्षुसम्पूजयेत् ॥ " ॐहूंफट्स्वाहा" इतिम न्त्रेण "ॐह्रींस्वाहा " इतिमन्त्रेणवाकायवाक्चित्तशोधनङ्कृत्वा

"रक्षरक्षहूँफट्स्वाहा" इत्यात्मानमभिरक्षयेत् "ॐशताभिषेके शताभिषेकेपदेहूँफट्स्वाहा;ॐपुष्पकेतुराजार्हत् पुष्पेपुष्पेमहापुष्पेसुपुष्पेपुष्पसम्भवे। पुष्पचयावकीर्णेहूँफट्स्वाहा"इतिपुष्पमभिमन्त्रयेत् अन्यानिपूजावस्तूनिसर्व्वाणिसामान्यार्घ्योदकेनाभिषिच्यधेनुमुद्रामत्स्यमुद्रेदर्शयित्वा पुष्पाणिशुद्धानि विभावयेत्॥ वमितिजलधाराम्प्रक्षिप्य, वह्निवीजेनवह्निप्रकारं विचिन्त्य "हूँफट्" इतिमन्त्रेणचतुर्द्दिक्षुक्रोधदृष्ट्यानिरीक्ष्यसर्व्वान् विघ्नानुत्सारयेत। तद्यथा "सर्व्वविघ्नानुत्सारयहूँफट्स्वाहा" इतिमन्त्रेण ऊर्ध्वमवलोक्यादिव्याँश्चतुर्द्दिक्षुजलक्षेपेणान्तरीक्षगान् वामपार्ष्णिघातत्रयेणभौमान् विघ्नानुत्सार्य्य लाजचन्दन सिद्धार्थतिलदधिदूर्व्वाक्षतानामन्यतममादाय "ॐअपसर्प्पन्तुते भूता येभूताभूमिसंस्थिताः॥ येचात्रविघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया" इतिपठँश्चतुर्द्दिक्षुक्षिपेत् । ततोवामे "ॐगुरुभ्योनमः, ॐपरमगुरुभ्योनमः, ॐपरात्परगुरुभ्योनमः, ॐपरमेष्ठिगुरुभ्योनमः॥ दक्षिणे "ॐगणेशायनमः" पुरतः "ॐदक्षिणकालिकायैनमः"इतिप्रणमेत् ॥ततःकरशुद्धिङ्कुर्य्यात्॥तद्यथा"हूँ"इतिमन्त्रेणचन्दनाक्तानिकुसुमान्यङ्गुल्यग्रेणादाय"हौं" इतिमन्त्रेणकराभ्याम्मर्द्दयित्वा"क्लीं"इतिबीजेन दक्षहस्तेनसम्मृज्य "ॐतत्सत्" इतिमन्त्रेणवामहस्तेनाघ्राय "हौं" इतिमन्त्रेणैशान्यान्दिशिपुष्पम्परित्यजेत्"ॐतेसर्व्वेविलयय्याँन्तुयेमांहिंसन्तिहिंसकाः॥ मृत्युरोगभयक्रोधाःपतन्तुरिपुमस्तके"इतिमन्त्रेणवापरित्यजेत् । परित्यागश्चनाराचमुद्रया॥

## अथभूतशुद्धिः।

शिरसि भैरवायऋषयेनमः। मुखे उष्णिक्छन्दसेनमः।हृदये

ॐदक्षिणकालिकायैनमः। गुह्ये क्रींवीजायनमः। पादयोः हूँ शक्तयेनमः। सर्व्वाङ्गे क्रींकीलकायनमः॥

## अथ षडङ्गन्यासः।

'क्रांहृदयायनमः' अङ्गुलीभिस्तर्ज्जनीमध्यमानामाभिःप्रसारिताभिर्हृदयंस्पृशेत॥ 'क्रींशिरसेस्वाहा' इतितर्ज्जनीमध्यमाभ्यां शिरसिस्पृशेत्॥ 'क्रूंशिखायैवषट्' इतिवद्धमुष्टिना अंगुष्ठेनशिखांस्पृशेत्॥ 'क्रैंकवचायहुम्' इतिमन्त्रेणव्यस्तहस्ताभ्यांसर्व्वाङ्गे॥ 'क्रौंनेत्रत्रयायवौषट्' इतितर्ज्जन्याअनामया नेत्रे, मध्यमयाभ्रूमध्यमेवन्नेत्रत्रयंस्पृशेत्॥ 'क्रः अस्त्रायफट्' इतिछोटिकयादिग्बन्धनंकुर्य्यात्॥ एवङ्करन्यासः 'क्रांअङ्गुष्ठाभ्यान्नमः,क्रींतर्ज्जनीभ्यांस्वाहा, क्रूंमध्यमाभ्याव्वँषट्,क्रैंअनामिकाभ्यां हूम् क्रौंकनिष्ठाभ्याव्वौषट् क्रः करतलकरपृष्ठाभ्यांफट्, एवङ्करन्यासँव्विधाय दशधासप्तधापञ्चधावा मूलेन व्यापकन्यासङ्कुर्य्यात्। ततःपूर्व्वोक्तक्रमेणप्राणायामत्रयव्विँदध्यात्॥तद्यथादक्षिणहस्ताङ्गुष्ठेनदक्षनासापुटन्निरुध्यवामनासापुटेन मूलं षोडशवारञ्जपन् शनैःशनैःप्राणाख्यवायुमाकृष्यशिरसिसहस्रारेधारयेदिति पूरकः। दक्षहस्तानामिकातर्ज्जन्यङ्गुष्ठैः नासापुटद्वयन्निरुध्य मूलञ्चतुःषष्टिवारञ्जपन्कुम्भयेत्। पुनर्द्दक्षनासापुटमङ्गुष्ठनिरोधनन्त्यक्त्वामूलन्द्वात्रिंशद्वारञ्जपञ्छनैःशनैस्तद्वायुंरेचयेत् इतिप्राणायामत्रयम्॥यदिसँव्विच्छोधनमिच्छेत्तदात्रैवकर्तव्यम् तद्विधिस्तु "ॐसिद्धाढ्यांशिवगेहिनीङ्करलसत्पाशाङ्कुशाम्भैरवीम्भक्ताभीष्टवरप्रदांसुकुशलांसंसारवन्धच्छिदाम् ॥ पीयूषाम्बुधिमन्थनोद्भवरसांसँव्विद्विलासाम्पराव्वीराराधितपादुकांसुविजयान्ध्यायेज्जगन्मोहिनीम्" इतिध्यात्वा "ॐसँविदेब्रह्मसम्भू

तेब्रह्मपुत्रिसदानघे ॥ भैरवानन्दतृप्त्यर्थं पवित्राभवसर्व्वदा ”
ॐब्राह्मण्यैनमः स्वाहा “ ॐसिद्धमूलक्रियेदेवि हीनबोधप्रबो
धिनि॥राजप्रजावशङ्करिशत्रुकण्ठनिषूदिनि॥” ऐंक्षत्रियायैनमः
स्वाहा“ ॐअज्ञानेन्धनदीप्ताग्निज्वालाग्निज्ञानरूपिणि॥आनन्द
स्यागमप्रीतिंसम्यग्ज्ञानम्प्रयच्छमे॥”ह्रींवैश्यायैनमःस्वाहा“ॐ
नमस्यामिनमस्यामियोगमार्ग्गप्रदर्शिनि। त्रैलोक्यविजये मातः
समाधिफलदाभव” क्लींशूद्रायैनमः स्वाहा इत्येतैर्मन्त्रैस्संशोध्य
ततः‘ॐअमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षय आकर्षय
सिद्धिन्देहिसर्व्वम्मेवशमानयस्वाहा’इति मन्त्रेणाभिमन्त्रयेत ॥
ततःॐह्रींह्रींलूंअःअंडंऐंमहाघोरेशाय नमः इत्यघोरमन्त्रेणचा
भिमन्त्र्यमूलमन्त्रंसप्तवारञ्जप्त्वाश्रीष्टदेवीमावाह्यधेनुमुद्राय्योनि
मुद्राञ्चप्रदर्श्यछोटिकाभिर्द्दिग्बन्धनन्तालत्रयञ्चकृत्वातत्रश्रीष्टदे
वीम्मानसोपचारैःसम्पूज्य‘ऐंगुँरुपादुकाभ्योनमः’ इतिमन्त्रेणब्र
ह्मरन्ध्रेश्रीगुरुन्त्रिधातर्प्पयेत् मूलेनहृत्कमलेश्रीष्टदेवताम्पञ्चधात
र्प्पयेत्। ततःस्वीकारः‘ऐंआत्मतत्त्वेनआत्मतत्त्वंशोधयामिस्वा
हा, ऐंविद्यातत्त्वेनविद्यातत्त्वंशोधयामिस्वाहा, ऐंशिवतत्त्वेनशि
वतत्त्वंशोधयामिस्वाहा, मूलमुच्चार्य्य ‘सर्व्वतत्त्वेनसर्व्वतत्त्वंशो
धयामिस्वाहा, ‘ऐंवदवदवाग्वादिनिममजिह्वाग्रेस्थिराभवसर्व्व
सत्त्ववशङ्करिस्वाहा,इतिमुखेनजाठराग्नौजुहुयात्मूलमन्त्रेणसर्व्व
म्पिवेत् ततःस्तुवीत “ सँव्विद्देविगरीयसीगुणमयीवैगुण्यविध्वं
सिनीमायामोहमदान्धकारशमनीतापत्रयोन्मूलिनी ॥ वाग्दे
वीवदनाम्बुजैकरसिकासम्बोधिनीदीपिकाब्रह्मज्ञानविवेकसिद्ध
विजयीविज्ञानमूर्त्त्यैनमः ॥ १ ॥ सँव्विदासवयोर्म्मध्ये सँव्वि
देवगरीयसी ॥ भयनाशायनिर्ग्गन्धाविख्यातामोदकारिणी ॥
॥ २ ॥ ” इतिस्तुत्वाश्रीगुरुंश्रीष्टदेवताञ्चप्रणम्यऋष्यादिन्या

सं, षडङ्गन्यासं, करन्यासञ्चकुर्य्यात् । तद्यथा ' शिरसिभैरवा यऋषयेनमः , मुखेऽउष्णिकृछन्दसेनमः, हृदये ॐदक्षिणाकालिकायैनमः, गुह्येक्रींबीजायनमः, पादयोः हूँशक्तयेनमः, सर्व्वाङ्गे क्रींकीलकायनमः ' ॥ अथषडङ्गन्यासः ॥ क्रांहृदयायनमः,क्रींशिरसेस्वाहा,क्रूंशिखायैवषट्,क्रैंकवचायहुम्, क्रौंनेत्रत्रयायवौषट्,क्रः अस्त्रायफट् ॥ एवंकरन्यासः ॥क्रांअङ्गुष्ठाभ्यांनमः,क्रींतर्ज्जनीभ्यांस्वाहा, क्रूंमध्यमाभ्यांवषट्, क्रैंअनामिकाभ्यांहूम्, क्रौंकनिष्ठाभ्यांवौषट्,क्रःकरतलकरपृष्ठाभ्यांफट् ॥एवंकरन्यासँविधायभूतशुद्धिङ्कुर्य्यात् ॥ अङ्केकरावुत्तानीकृत्यनिश्चलचित्तः 'साहम् ' इतिमन्त्रेणप्रबोधिताङ्कुण्डलिनीम्मूलाधारात् सुषुम्नावर्तमनाः स्वाधिष्ठाने मणिपूरेऽनाहतेक्रमेणानीय तत्र स्थितञ्जीवम्प्रदीपकलिकाकारँव्विचिन्त्यतन्मुखे निक्षिप्यततोविशुद्धाख्याज्ञाचक्रेआनीयततःशिरोवस्थिताधोमुखसहस्रारचक्रेहिमनिभसर्व्ववर्णविभूषिताकखादित्रिरेखासुआलक्षत्रयविभूषितसहस्रदलयुक्तम्पद्मम् । तत्रगुरुं तस्मिन्समानीयतत्कर्णिकास्थपरशिवे " हंसः" इतिमन्त्रेणसँयोजयेत् ॥ अथपादतो जानुपर्यन्तञ्चतुष्कोणंसुवर्णाभं ' लम् ' इतिबीजेन युक्तं सवज्रकम्पृथ्वीमण्डलन्तत्रगमनसहितम्पादेन्द्रियङ्गन्धसहितङ्घ्राणेन्द्रियन्निवृत्तिकलायुक्तम्ब्रह्माणं,समानवायुञ्चविभावयेत् । ततोजानुतोनाभिपर्य्यन्तमर्द्धचन्द्राकारं श्वेताभं'वम्'इतिबीजेनयुक्तम्पद्मद्वयलाञ्छितञ्जलमण्डलन्तत्रच ग्रहणक्रियासहितम्पाणीन्द्रियंरसेनसहजिह्वेन्द्रियम्प्रतिष्ठाकलासहितं श्रीविष्णुमुदानवायुञ्चविभावयेत् ॥ ततोनाभितोहृदयपर्य्यन्तन्त्रिकोणंरक्तं ' रम्'इति बीजेनयुक्तंस्वस्तिकान्वितन्तेजोमण्डलन्तत्रच विसर्गक्रियासहितम्पाय्विन्द्रियंरूपेणचक्षुरिन्द्रियव्विँद्याकलासहितंशिवँव्यानवा

युञ्चविभावयेत् ॥३॥ ततोहृदयाद्भ्रूमध्यपर्य्यन्तँव्वर्तुलन्धूम्रवर्णं यम्'इतिबीजेनयुक्तं षड्विन्दुलाञ्छितव्वाँयुमण्डलन्तत्रानन्द क्रियासहितोपस्थेन्द्रियं स्पर्शसहितन्त्वगिन्द्रियम्॥शान्तिकला सहितमीशानमपानवायुञ्चविभावयेत् ॥ ततोभ्रूमध्याद्ब्रह्मर न्ध्रपर्य्यन्तँव्वृत्तंस्वच्छं 'हम्' इतिबीजेनयुक्तन्नभोमण्डलन्तत्र वचनाक्रियासहितँव्वागिन्द्रियंशब्दसहितं श्रोत्रेन्द्रियं, शान्त्य तीताख्यकलासाहितं सदाशिवम्प्राणवायुञ्च ध्यायेत् ॥ ततःस हस्रारे शून्येसर्व्वचैतन्यमये परब्रह्म ध्यायेत् ॥ ततः सपरिकर म्पृथ्वीमण्डलञ्जलमण्डले, तच्चवह्निमण्डले, तच्चवायुमण्डले तच्चाकाशमण्डले, तच्चाहङ्कारे, तम्महत्तत्त्वे, तच्चप्रकृतौ, ता ञ्चब्रह्मणि लीनँव्विभावयेत् ॥ ततःसर्वशून्यँव्विचिन्तयेत् ॥ ततोदक्षिणकुक्षौकृष्णवर्णमङ्गुष्ठप्रमाणम्ब्रह्महत्याशिरस्कंस्वर्ण स्तेयभुजंसुरापानहृदयङ्गुरुतलपकटीयुतन्तत्संसर्ग्गपदद्वन्द्वमुप पातकरोमकञ्चर्म्मधरमधोमुखम्पापपुरुषव्विँचिन्त्यतत्सहितंश रीरम्पूरकविधिनादशकृत्वोजप्तेन " यम् " इतिबीजेन नभो ध्यातेनसंशोष्यकुम्भकविधिनाचतुः षष्टिकृत्वोजप्तेन"रम्" इति वीजेनवह्निमण्डलेमेढ्रमूलेवाध्यातेन, रक्तवर्णाम्मायात्राभौध्या त्वातदुद्भूताग्निनासन्दह्यरेचकविधिनाद्वात्रिंशत्कृत्वोजप्तेन 'यम्' इतिवीजेनपापपुरुषोद्भवम्भस्मकालीवीजंहृदिपीताभन्ध्यात्वात दुद्भूतेनवायुनाप्रोत्सारयेत्॥ततः पूरकविधिनाषोडशकृत्वोजप्तेन 'वम्' इतिवरुणवीजेनहृदिस्थेनघण्टिकायान्ध्यातेनवातद्भस्म ललाटेतुषाराभङ्कञ्चवीजन्ध्यात्वातदुद्भूतेनामृतेनाप्लाव्यकुम्भक विधिनाचतुःषष्टिजप्तेन 'लम्' इतिवीजेनपृथ्वीमण्डलेध्यातेन तद्भस्मघनीकृत्यरेचकविधिनाद्वात्रिंशत्कृत्वोजप्तेन 'हम्' इतिवीजेन नभोमण्डलेस्थितेनाज्ञानिरेचयित्वा पापपुण्यानि

र्मुक्तंशरीरंशाम्भवन्ध्यात्वाचिन्मयाद्भूतानिउत्पादयेत् । तद्यथा 'सोहं, हंसः' इतिवामन्त्रेणप्रकृतिश्चिन्मयादुत्पाद्य प्रकृतेर्म्महत्त त्वम्महत्तत्वादहङ्कारमहङ्काराान्नभो, नभसोवायुं, वायोराग्निं, वन्हे रपस्ततः पृथ्वीमुत्पादयेत् । तेनैवमन्त्रेणकुण्डलिनीश्चैतन्यमयी श्चन्द्रमण्डलान्तर्गताामृतम्पाययित्वाषट्सुचक्रेषुक्रमशः स्वचर णयुगलान्तर्गताामृतवृष्टयासिञ्चन्तीन्तेष्वानीयजीवन्तयावियो ज्यहृदयेसंस्थाप्यताम्मूलाधारे स्वयम्भूलिङ्गेस्थापयेत् इत्यात्मा नन्दंवतामयन्ध्यायेत् ॥ इतिभूतशुद्धिः ॥ ततः प्राणमन्त्रेणजीव स्थापनङ्कुर्य्यात ॥ तत्रक्रमः ॐअस्यप्राणस्थापनमन्त्रस्यब्र ह्मविष्णुमहेश्वराऋषयः ऋग्यजुस्सामानिछन्दांसि चैतन्यरूपा प्राणशक्तिर्द्देवता प्राणस्थापनेविनियोगः ॥ शिरासि ब्रह्मविष्णुम हेश्वरेभ्य ऋषिभ्योनमः, मुखेऋग्यजुस्सामभ्यश्छन्दोभ्योन मः, हृदयेप्राणशक्त्यैदेवतायैनमः, गुह्येआंबीजायनमः, पादयोः ह्रींशक्तयेनयः,सर्व्वाङ्गेक्रौंकीलकायनमः, इतिविन्यस्यषडङ्गानि विन्यसेत ॥ ङंकंखंगंघंआकाशवायुवह्निजलपृथिव्यात्मनेहृद यायनमः । ञंचंछंजंझंशब्दस्पर्शरूपरसगन्धात्मनेशिरसेस्वा हा । णंटंठंडंढंश्रोत्रत्वक्चक्षुर्ज्जिह्वाघ्राणात्मनेशिखायैवषट् । नंतं थंदंधंवाक्पाणिपादपायूपस्थात्मनेकवचायहूँ॥ मंपंफंबंभंवक्तव्या दानगमनाविसर्गानन्दात्मने नेत्रत्रयायवौषट् । शंयंरंवंलंहंषंक्षं संलंमनोबुद्धयहङ्काराचित्तात्मने अस्त्रायफट् ॥ एवङ्करन्यासः सोपियथा।नाभेरारभ्यपादान्तम् आमितिन्यसेत् ङंकंखंघंगंआ काशवायुवह्निजलपृथिव्यात्मने अङ्गुष्ठाभ्यान्नमः, ञंचंछंझंजंश ब्दस्पर्शरूपरसगन्धात्मनेतर्ज्जनीभ्यांस्वाहा,णंटंठंढडंश्रोत्रत्वक्च क्षुर्जिह्वाघ्राणात्मनेमध्यमाभ्याँवौषट्, नंतंथंधंदंवाक्पाणिपादपा यूपस्थात्मनेअनामिकाभ्यांहूम्, मंपंफंभंबंवक्तव्यादानगमनाविस

गर्गानन्दात्मनेकनिष्ठिकाभ्यांवौषट्,शंयंरंवंलंहंषंक्षंसंलंमनोबुद्धच हङ्कारचित्तात्मने करतलकरपृष्ठाभ्याम्फट् । ततोनाभितोहृदयप र्य्यन्तंह्रीमितिहृदयान्मस्तकान्तङ्क्रौंमितिविन्यसेत्, यन्त्वगात्म नेनम इतिहृदि, रंअसृगात्मनेनम इतिदक्षिणांसे, लंमांसात्म नेनम इतिककुदि, वंमेदआत्मनेनम इतिवामस्कन्धे, शंअस्थ्या त्मनेनम इतिहृदयाद्दक्षिणभुजाग्रान्तं, षंमज्जात्मनेनम इतिह दयाद्वामभुजाग्रान्तं, संशुक्रात्मनेनम इतिहृदयाद्दक्षिणपादाग्रा न्तं हौंओजआत्मनेनम इतिहृदयाद्वामपादाग्रान्तं, हंप्राणात्म नेनम इतिहृदयान्नाभ्यन्तं, संजीवात्मनेनम इतिहृदयान्मस्त कान्तन्प्राणमन्त्रेण सप्तधापञ्चधावाव्यापकन्यासङ्कुर्य्यात् ॥ततो ध्यायेत् ॥ यथा"रक्ताब्धिपोतारुणपद्मसंस्थापाशाङ्कुशेष्वासश रासिबाणान्॥शूलङ्कपालन्दधतीङ्कराब्जैरक्तान्त्रिनेत्राम्प्रणमामि देवीम्" ततोवक्ष्यमाणलेलिहानमुद्रयाहृदयंस्पृशन्नेकादशवारंप्रा णमन्त्रञ्जपेत्॥मन्त्रश्च आंह्रींक्रोंयंरंलंवंशंषंसंहोंओंक्षंसंहंसः ह्रींओं हंसःश्रीदक्षिणकालिकायाः ( मम ) प्राणाइहप्राणाः,आंह्रींक्रोंयं रंलंवंशंषंसंहोंओंक्षंसंहंसः ह्रींओंहंसः श्रीदक्षिणकालिकाया जीव इहस्थितः, आंह्रींक्रोंयंरंलंवंशंषंसंहोंओंक्षंसंहंसः श्रीदक्षिणकालि कायाःसर्व्वेन्द्रियाणिइहस्थितानिआंह्रींक्रोंयंरंलंवंशंषंसंहोंओंक्षं संहंसः ह्रींओंहंसः श्रीदक्षिणकालिकायावाङ्मनस्त्वक्चक्षुःश्रो त्रघ्राणप्राणाइहागत्यसुखञ्चिरन्तिष्ठन्तुस्वाहा, ओंक्षंसंहंसः ह्रींओं आंह्रींक्रोंश्रीदक्षिणकालिकायाःप्राणाइहप्राणाः, आंह्रींक्रोंश्रीद क्षिणकालिकाया जीवइहास्थितःआँह्रींक्रोंश्रीदक्षिणकालिकायाः सर्व्वेन्द्रियाणि, आँह्रींक्रोंश्रीदक्षिणकालिकायाः वाङ्मनस्त्व क्चक्षुःश्रोत्रघ्राणप्राणा इहागत्यसुखञ्चिरन्तिष्ठन्तुस्वाहा ॥ततोदे वतारूपमात्मानन्ध्यात्वाप्राणायामऋष्यादिन्यासषडंगन्यासक

रन्यासान्विधाय मातृकान्यासमाचरेत् ॥ तत्र ॐ अस्य मातृकामन्त्रस्यब्रह्माऋषिर्गायत्रीछन्दो, मातृकासरस्वतीदेवता, हलोबीजानि, स्वराःशक्तयस्तदुभयङ्कीलकं अभीष्टसिद्धयर्थेन्यासेविनियोगः॥प्राणायामोयथा इडयाअइउऋऌएऐओऔएभिः स्वरैः पूरयेत, कुचुटुतुपुइतिवर्णपञ्चकेनकुम्भयेत् । यरलवशषसहएभिरष्टभिर्व्वर्णैरेचयेत् ॥ ऋष्यादिन्यासोयथा शिरसिब्रह्मणेऋषयेनमः, मुखेगायत्रीछन्दसेनमःहृदिमातृकासरस्वत्यैनमः, लिङ्गेहल्भ्योबीजेभ्योनमः, पादयोःस्वरेभ्यःशक्तिभ्योनमः सर्वाङ्गेतदुभयकीलकायनमः ॥ अथषडङ्गन्यासोयथा ॥ अंकंखंगंघंङं आँहृदयायनमः, इंचंछंजंझंञंईंशिरसेस्वाहा, उंटंठंडंढंणं ऊंशिखायैवषट्, एंतंथंदंधंनंऐंकवचायहुम् ओंपंफंबंभंमंऔं नेत्रत्रयायवौषट्, अंयंरंलंवंशंषंसंहंलंक्षं अः अस्त्रायफट् ॥ एवङ्करन्यासोयथा ॥ अंकंखंगंघंङं आँअङ्गुष्ठाभ्यान्नमः, इंचंछंजंझंञंईतर्ज्जनीभ्यांस्वाहा, उंटंठंडंढंणंऊंमध्यामाभ्यांवषट्, एंतंथंदंधंनंऐं अनामिकाभ्यांहूम, ओंपंफंबंभंमं औंकनिष्ठिकाभ्यां वौषट् अंयंरंलंवंशंषंसंहंलंक्षंअःकरतलकरपृष्ठाभ्यांफट् ॥ अथध्यानम् " पञ्चाशल्लिपिभिर्व्विभक्तसुखदोःपन्मध्यवक्षःस्थलान्भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ॥ मुद्रामक्षगुणंसुधाढ्यकलशं व्याख्याञ्चहस्ताम्बुजैर्बिभ्राणाव्विशँदप्रभान्त्रिनयनाव्वाग्देवतामाश्रये" अथान्तर्म्मातृकान्यासः॥ अंइंउंऋंऌंएंऐंओंऔं नमइतिधूम्राभेषोडशदलेकण्ठेन्यसेत, कंखंगंघंङंचंछंजंझंञंटंठंनमइतिद्वादशदलेप्रवालनिभेहृदये, डंढंणंतंथंदंधंनंपंफंनमइतिनीलजीमूतसन्निभेदशदलेनाभेरुपरिमणिपूरे, बंभंमंयंरंलंनमइतिविद्युन्निभेषड्दलेनाभेरधःस्वाधिष्ठाने, वंशंषंसंनमइतिसुवर्णाभेचतुर्दलेमूलाधारे, हंक्षंनमइतिद्विदलेचन्द्राभे

भ्रूमध्ये आज्ञाचक्रे न्यसेत् "सहस्रारेहिमनिभेसर्व्ववर्णविभूषिते ॥ अकखादित्रिरेखासुआलक्षत्रयभूषिते ॥" परबिन्दुभ्योनमइतिन्यसेत्।मूलादिब्रह्मरंध्रान्ताम्बिन्दुश्चिदात्मकन्ध्यात्वातत्स्नुतसुधासारैम्मार्तृकान्तर्प्पयेत् ॥ ललाटेअंनमः,मुखवृत्ते आंनमः, दक्षनेत्रेइंनमः, वामनेत्रेईंनमः,दक्षकर्णेउंनमः,वामकर्णे ऊंनमः, दक्षनासायांऋंनमः, वामनासायाम् ॠंनमः, दक्षगण्डेलृंनमः, वामगण्डेलॄंनमः, ऊर्ध्वौष्ठे एंनमः,अधरोष्ठे ऐंनमः, ऊर्ध्वदन्तपङ्क्तौ ओंनमः, अधोदन्तपङ्क्तौ औंनमः,शिरासि अंनमः, मुखे अःनमः, ॥ वीरचूडामणौतु जिह्वाग्रे अंनमः, कण्ठदेशे अःनमः॥ दक्षिणवाहुमूलेकंनमः, कूर्प्परे खंनमः, मणिवन्धे गंनमः, अंङ्गुलीमूले घंनमः, अङ्गुल्यग्रे ङंनमः, वामवाहुमुले चं नमः, कूर्प्परेछंनमः,मणिवन्धेजंनमः,अङ्गुलीमूले झंनमः, अंङ्गुल्यग्रेञंनमः, दक्षिणोरुमूले टंनमः, जानुनिठंनमः, गुल्फे डंनमः. अङ्गुलीमूलेढंनमः, अङ्गुल्यग्रे णंनमः, वामोरुमूलेतं नमः, जानुनिथंनमः, गुल्फेदंनमः, अङ्गुलीमूलेधंनमः, अङ्गुल्यग्रेनंनमः,दक्षपार्श्वेपंनमः,वामपार्श्वेफंनमः,पृष्ठेबंनमः, नाभौ भंनमः उदरेमंनमः,हृदयेयंत्वगात्मनेनमः,दक्षांसेरंअसृगात्मनेनमः,ककुदिलंमांसात्मनेनमः,वामांसेवंमेदआत्मनेनमः, हृदयाद्दक्षभुजाग्रान्तंशंअस्थ्यात्मनेनमः, हृदयाद्वामभुजाग्रान्तंषंमज्जात्मनेनमः, हृदयाद्दक्षपादाग्रान्तंशुक्रात्मनेनमः, हृदादिवामपादाग्रान्तंहंआत्मनेनमः, हृदयान्मस्तकान्तंलंपरमात्मनेनमः, इतिवहिर्मातृकान्यासः, अथसृष्टिक्रमः ॥ तत्रतुविसर्गान्वितः प्रणवपुटितोवामायालक्ष्मीवीजपूर्व्वोवावाग्भवाद्योवान्यस्तत्रयः तत्रवाग्भवाद्योयथा जिह्वाग्रेऐंअंनमः,कण्ठदेशतःऐंअःनमः,दाक्षिणवाहुमूलेऐंकंनमः, कूर्प्परेऐंखंनमः,मणिवन्धेऐंगंनमः,अङ्गुलीमूलेऐंघंनमः, अङ्गुलयग्रेऐंङंनमः; वामवाहुमूलेऐंचंनमः, कूर्प्प-

रेऐंछंनमः मणिबन्धेऐंजंनमः, अङ्गुलीमूलेऐंझंनमः, अङ्गुल्यग्रे ऐंञंनमः,दक्षिणोरुमूलेऐंटंनमः, जानुनिऐंठंनमः, गुल्फेऐंडंनमः, अङ्गुलीमूलेऐंढंनमः, अङ्गुल्यग्रेऐंणंनमः, वामोरुमूलेऐंतंनमः, जानुनिऐंथंनमः, गुल्फेऐंदंनमः, अङ्गुलीमूलेऐंधंनमः, अगुल्य ग्रेऐंनंनमः, दक्षपार्श्वेऐंपंनमः, वामपार्श्वेऐंफंनमः, पृष्ठेऐंबंनमः नाभौऐंभंनमः, उदरेऐंमंनमः, हृदयेऐंयंत्वगात्मनेनमः, दक्षां सेऐंरंअसृगात्मनेनमः, ककुदिऐंलंमांसात्मनेनमः, वामांसेऐंवं मेदआत्मनेनमः, हृदयाद्दक्षभुजाग्रान्तम् ऐंशंअस्थ्यात्मने नमः, हृदयाद्वामभुजाग्रान्तम् ऐंषंमज्जात्मनेनमः, हृदया द्दक्षपादाग्रान्तम् ऐंसंशुक्रात्मनेनमः, हृदादिवामपादाग्रान्तम् ऐंहंआत्मनेनमः, हृदयान्मस्तकान्तम् ऐंलंपरमात्मनेनमः ॥

## अथस्थितिक्रमः ।

तत्र प्रथमन्ध्यानय्यँथा "सिन्दूरकान्तिमसिताभरणान्त्रिने त्राँव्विद्याक्षसूत्रमृगपोतवरान्दधानाम् ॥ पार्श्वस्थिताम्भगवती- मपिकाञ्चनाङ्गीन्ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम्" एवंध्या त्वान्यसेत्॥तद्यथा--ललाटेटंटंडंनमः, मुखवृते टंठंडंनमः, दक्ष नेत्रे टंठंडंनमः, वामनेत्रे टंठंडंनमः, दक्षकर्णे टंठंडंनमः, वाम कर्णे टंठंडंनमः, दक्षनासायाम् टंठंडंनमः वामनासायाम् टंठं डंनमः,दक्षगण्डे टंठंडंनमः, वामगण्डे टंठंडंनमः, उर्द्ध्वोष्ठे टंठंडं नमः,अधरोष्ठे टंठंडंनमः, ऊर्द्ध्वदन्तपङ्क्तौ टंठंडंनमः अधोदन्त पङ्क्तौ टंठंडंनमः, शिरसि टंठंडंनमः, मुखे टंठंडंनमः, जिह्वाग्रे टंठंडंनमः, कण्ठदेशे टंठंडंनमः, दक्षिणबाहुमूले टंठंडंनमः, कूर्प्परे टंठंडंनमः,मणिबन्धे टंठंडंनमः,अङ्गुलीमूले टंठंडंनमः, अगुल्यग्रेटंठंडंनमः, वामबाहुमूले टंठंडंनमः, कूर्प्परेटंठंडंनमः,

मणिबन्धे टंठंडंनमः, अङ्गुलीमूले टंठंडंनमः, दक्षिणोरुमूले टंठं डंनमः, जानुनि टंठंडंनमः, गुल्फे टंठंडंनमः, अङ्गुलीमूले टंठं डंनमः, अङ्गुल्यग्रे टंठंडंनमः, वामोरुमूले टंठंडंनमः, जानुनि टंठंडंनमः, गुल्फे टंठंडंनमः, अङ्गुलीमूले टंठंडंनमः, अङ्गुल्यग्रे टंठंडंनमः, दक्षपार्श्वे टंठंडंनमः, वामपार्श्वे टंठंडंनमः, पृष्ठे टंठंडंनमः, उदरे टंठंडंनमः, हृदये टंठंडंनमः, दक्षांसे टंठं डंनमः, ककुदि टंठंडंनमः, वामांसे टंठंडंनमः, हृदयाद्दक्षभुजाग्रान्तम्, टंठंडंनमः, हृदयाद्वाम भुजाग्रान्तम्, टंठंडंनमः, हृदयाद्दक्षपादाग्रान्तम्, टंठंडंनमः, हृदयाद्वामपादाग्रान्तम्, टंठंडंनमः, हृदयान्मस्तकान्तम्, टंठंडंनमः ॥

इतिस्थितिक्रमः ।

तत्रध्यानंयथा" अक्षस्रजं हरिणपोतमुदग्रटंकं विद्याकरैरविरतं दधतींत्रिनेत्राम् ॥ अर्द्धेन्दुमौलिभरणामरविन्दवासां वर्णेश्वरींप्रणमतंस्तनभारखिन्नाम्"॥तत्रक्रमः॥ललाटे क्षंनमः,मुखवृत्ते हंनमः, दक्षनेत्रे संनमः, वामनेत्रे षंनमः, दक्षकर्णे शंनमः, वामकर्णेवंनमः, दक्षनासायांलंनमः, वामनासायांरंनमः, दक्षगण्डे यंनमः,वामगण्डेमंनमः, ऊर्द्धौष्ठेभंनमः,अधरोष्ठे बंनमः, ऊर्ध्वदन्तपङ्क्तौ फंनमः,अधोदन्तपङ्क्तौ पंनमः,शिरसि नंनमः,मुखे धंनमः, दक्षिणबाहुमूले दंनमः, कूर्प्परे थंनमः, मणिबन्धे तंनमः, अङ्गुलीमूले णंनमः, अङ्गुल्यग्रे ढंनमः, वामबाहुमूले डंनमः, कूर्प्परे ठंनमः, मणिबन्धे टंनमः, अङ्गुलीमूले ञंनमः, अङ्गुल्यग्रे झंनमः, दक्षिणोरुमूले जंनमः, जानुनि छंनमः, गुल्फे चंनमः, अङ्गुलीमूले ङंनम;ः अङ्गुल्यग्रे घंनमः, वामोरुमूले गंनमः, जानुनि खंनमः, गुल्फे कंनमः, अङ्गुलीमूले

अः नमः, अङ्गुल्यग्रे अंनमः, दक्षपार्श्वे आनमः, वामपार्श्वे ओंनमः, पृष्ठेऐंनमः, नाभौ एंनमः, उदरेलृंनमः, हृदयेलृंनमः, दक्षांसे ॠंनमः,ककुदि ऋंनमः, वामांसे ऊंनमः, हृदयाद्दक्षभुजाग्रान्तम् उंअस्थ्यात्मनेनमः, हृदयाद्वामभुजाग्रान्तम् ईंमज्जात्मनेनमः, हृदयाद्दक्षपादाग्रान्तम् इंशुक्रात्मनेनमः, हृदादिवामपादाग्रान्तम् आंआत्मनेनमः,हृदयान्मस्तकान्तम् अंपरमात्मनेनमः॥इतिसंहारक्रमः॥अथश्रीकण्ठादिन्यासः॥तत्रध्यानंयथा"अतिश्यामांत्रिनयनांशवासनसमुन्नताम् ॥ बिभ्रतींविविधाकल्पाश्चतुर्दिक्षुशिवायुताम् ॥ पाशाङ्कुशवराक्षस्रक्पाणिंशीतांशुशेखराम् ॥ त्र्यक्षंरक्तसुवर्णाभमर्द्धनारीश्वरंभजे" ॥ शक्तिध्यानंयथा ॥ "एतारुद्राङ्कपीठस्थाःसिन्दूरारुणविग्रहाः ॥ रक्तोत्पलाःकपालाभ्यामलङ्कृतकराम्बुजाः"इतिरुद्रन्यासेध्यानंकर्त्तव्यम् ॥अस्य श्रीकण्ठादिन्यासस्य दक्षिणामूर्त्तिर्ऋषिर्गायत्रीछन्दोऽर्द्धनारीश्वरो देवता, श्रीकण्ठादिन्यासेविनियोगः॥ललाटे अंश्रीकण्ठाय पूर्णोदर्य्यैनमः, मुखवृत्तेआंअनन्तायवीर्य्यायैनमः, दक्षनेत्रेइंसूक्ष्मेशायशाल्मल्यैनमः, वामनेत्रे ईंत्रिमूर्त्तयेलोलाक्ष्यैनमः, दक्षकर्णे उंअमरेशायवर्त्तुलाक्ष्यैनमः,वामकर्णेऊंअर्घीशायदीर्ग्घघोणायैनमः, दक्षनासायाम् ऋंमारभूतयेदीर्घमुख्यैनमः, वामनासायाम् ॠंतिथीशायगोमुख्यैनमः, दक्षगण्डे लृंस्थाराधीशायदीर्घजिह्वायैनमः, वामदण्डे लॄंहरायकुण्डोदर्य्यैनमः, ऊर्ध्वोष्ठे एंझिणीशाय उर्द्धकेश्यैनमः,अधरोष्ठे ऐंभौक्तिकायविकृतमुख्यैनमः, ऊर्द्धदन्तपङ्क्तौ ओंसद्योजातायज्वालामुख्यैनमः, अधोदन्तपङ्क्तौ औंअनुग्रहेशायउल्कामुख्यैनमः, शिरसि अंअक्रूरायश्रीमुख्यैनमः,मुखे अःमहासेनायविद्यामुख्यैनमः, दक्षिणबाहुमूले कंक्रोधीशाय महाकाल्यैनमः, कूर्प्परे खंचण्डीशायसरस्वत्यैनमः, मणिबन्धेगं

पञ्चान्तकायगौर्य्यैंनमः, अङ्गुलीमूलेघंशिवोत्तमायत्रैलोक्यविद्या
यैनमः, अङ्गुल्यग्रे ङंएकरुद्रायमन्त्रशक्त्येनमः, वामबाहुमूलेचंकू
र्म्मेशायआत्मशक्त्यैनमः, कूर्प्परे छंएकनेत्रायभूतिमात्रेनमः, म
णिबन्धे जंचतुराननायलम्बोदर्य्यैंनमः,अङ्गुलीमूले झंअजेशाय
द्राविण्यैनमः, अङ्गुल्यग्रे ञंसर्व्वेशायनागर्य्यैंनमः, दक्षिणोरुमूले
टंसोमेशायखेचर्य्यैंनमः, जानुनि ठंलाङ्गलीशायमञ्जर्य्यैंनमः
गुल्फे डंडारकेशायरूपिण्यैनमः, अङ्गुलीमूले ढंअर्द्धनारीशाय
वीरिण्यैनमः, अङ्गुल्यग्रेणंउमाकान्तायकाकोदर्य्यैंनमः, वामो
रुमूले तंआषाढिनेपूतनायैनमः, जानुनि थंदण्डिनेभद्रकाल्यै
नमः,गुल्फे दंअत्रीशाययोगिन्यैनमः, अङ्गुलीमूले धंमीनेशायशं
खिन्यैनमः, अङ्गुल्यग्रे नंमेषेशायगर्ज्जिन्यैनमः, दक्षपार्श्वे पंलो
हितायकालरात्र्यैनमः,वामपार्श्वे फंशिखीशायवकूर्दिन्यैनमः,पृष्ठे
बंछगलण्डायकपर्दिन्यैनमः, नाभौ भंद्विरंडेशायवज्रायैनमः,
उदरे मंमहाकालायजयायैनमः, हृदये यंवाणीशायसुमुखेश्वर्य्यै
नमः,दक्षांसे रंभुजङ्गायरेवत्यैनमः,ककुदि लंपिनाकिनेमाधव्यैन
मः, वामांसेवंषड्गीशायवारुण्यैनमः, हृदयादक्षभुजाग्रान्तं शं ब
केशायवायव्यैनमः, हृदयादिवामभुजाग्रान्तं षंश्वेतायरक्षोवि
दारिण्यैनमः, हृदयादक्षपादाग्रान्तंसंभृगवेसहजायैनमः, हृदा
दिवामपादाग्रान्तम्, हंनकुलीशायलक्ष्म्यैनमः, हृदयान्मस्तका
न्तं क्षंसँव्वर्त्तकायमहामायायैनमः ॥ इतिरुद्रन्यासः ॥

## अथकालीतन्त्रोक्तप्रकारेणषोढान्यासःकर्त्तव्यः ॥

यथामातृकान्यासःप्रथमः ॥ अंआंइंईंउंऊंऋंॠंऌंॡंनमोहृ
दि, एंऐंओंऔंअंअः कंखंगंघंदक्षभुजे, ङंचंछंजंझंञंटंठंडंढंवामभु

जे, णंतंथंदंधंनंपंफंबंभंदक्षपादे, मंयंरंलंवंशंपंसंहंळंक्षंइतिवाम पादेविन्यसेत् ॥ इति मातृकान्यासःप्रथमः ॥

## अथद्वितीयः ।

ललाटे, श्रींअंश्रींअंश्रींअंनमः मुखवृत्तेश्रींआंश्रींआंश्रींआं नमः, दक्षनेत्रे श्रींइंश्रींइंश्रींइंनमः, वामनेत्रेश्रींईंश्रींईंश्रींईंनमः, दक्षकर्णेश्रींउंश्रींउंश्रींउंनमः, वामकर्णेश्रींऊंश्रींऊंश्रींऊंनमः, दक्षनासायां श्रींऋंश्रींऋंश्रींऋंनमः, वामनासायांश्रींॠंश्रींॠं श्रींॠंनमः, दक्षगण्डेश्रींऌंश्रींऌंश्रींऌंनमः, वामगण्डेश्रींॡं श्रींॡंश्रींॡंनमः, ऊर्ध्वोष्ठेश्रींएंश्रींएंश्रींएंनमः, अधरोष्ठेश्रींऐंश्री ऐंश्रींऐंनमः, ऊर्ध्वदन्तपङ्क्तौश्रींओंश्रींओंश्रींओंनमः, अधोदन्तपङ्क्तौश्रींऔंश्रींऔंश्रींऔंनमः, शिरसिश्रींअंश्रींअंश्रींअंनमः, मुखेश्रींअःश्रींअःश्रींअःनमः, दक्षिणवाहुमूलेश्रींकंश्रींकंश्रींकंनमः, कूर्प्परेश्रींखंश्रींखंश्रींखंनमः, मणिवन्धेश्रींगंश्रींगंश्रींगंनमः, अङ्गुलीमूलेश्रींघंश्रींघंश्रींघंनमः, अङ्गुल्यग्रेश्रींङंश्रींङंश्रींङंनमः, वामबाहुमूलेश्रींचंश्रींचंश्रींचंनमः, कूर्प्परेश्रींछंश्रींछंश्रींछंनमः, मणिबन्धे श्रींजंश्रींजंश्रींजंनमः, अङ्गुलीमूले श्रींझंश्रीं झंश्रींझंनमः, अङ्गुल्यग्रे श्रींञंश्रींञंश्रींञंनमः, दक्षिणोरुमूले श्रींटंश्रींटंश्रींटंनमः, जानुनि श्रींठंश्रींठंश्रींठंनमः, गुल्फे श्रीं डंश्रींडंश्रींडंनमः, अङ्गुलीमूले श्रींढंश्रींढंश्रींढंनमः, अङ्गुल्यग्रे श्रींणंश्रींणंश्रींणंनमः, वामोरुमूले श्रींतंश्रींतंश्रींतंनमः; जानुनि श्रींथंश्रींथंश्रींथंनमः, गुल्फे श्रींदंश्रींदंश्रींदंनमः, अङ्गुलीमूले श्रींधंश्रींधंश्रींधंनमः, अङ्गुल्यग्रे श्रीनंश्रींनंश्रींनंनमः, दक्षपार्श्वे श्रींपंश्रींपंश्रींपंनमः, वामपार्श्वेश्रींफंश्रींफंश्रींफंनमः, पृष्ठे श्रींबंश्रींबंश्रींबंनमः, नाभौ श्रींभंश्रींभंश्रींभंनमः, उदरे

श्रींमंश्रींमंश्रींमंनमः, हृदये श्रींयंश्रींयंश्रींयं त्वगात्मनेनमः, दक्षांसे श्रींरंश्रींरंश्रींरंअसृगात्मनेनमः, ककुदि श्रींलंश्रींलंश्रींलंमांसात्मनेनमः, वामांसे श्रींवंश्रींवंश्रींवंमेदआत्मनेनमः, हृदयाद्दक्षभुजाग्रान्तं श्रींशंश्रींशंश्रींशंअस्थ्यात्मनेनमः, हृदयाद्वामभुजाग्रान्तं श्रींषंश्रींषंश्रींषंमज्जात्मनेनमः, हृदयाद्दक्षपादाग्रान्तं श्रींसंश्रींसंश्रींसंशुक्रात्मनेनमः, हृदादिवामपादाग्रान्तं श्रींहंश्रींहंश्रींहंआत्मनेनमः, हृदयान्मस्तकान्तम् श्रींक्षंश्रींक्षंश्रींक्षंपरमात्मनेनमः ॥ इतिद्वितीयः ॥

## अथतृतीयः ।

ललाटे क्लींश्रींक्लींश्रींक्लींश्रींनमः, मुखवृत्ते क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षनेत्रे क्लींश्रींक्लींश्रींक्लींश्रींनमः, वामनेत्रे क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षकर्णे क्लींश्रींक्लींश्रींक्लींश्रींनमः, वामकर्णे क्लींश्रीं क्लींश्रींक्लींश्रींनमः, दक्षनासायां क्लींश्रींक्लींश्रींक्लींश्रींनमः, वामनासायां क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षगण्डे क्लींश्रींक्लींश्रींक्लींश्रींनमः, वामगण्डे क्लींश्रींक्लींश्रींक्लींश्रींनमः, ऊर्ध्वोष्ठे क्लींश्रींक्लींश्रींक्लींश्रींनमः, अधरोष्ठे क्लींश्रींक्लींश्रींक्लींश्रींनमः, ऊर्ध्वदन्तपङ्क्तौ क्लींश्रींक्लींश्रींक्लींश्रींनमः, अधोदन्तपङ्क्तौ क्लींश्रींक्लींश्रींक्लींश्रींनमः, शिरसि क्लींश्रींक्लींश्रींक्लींश्रींनमः, मुखे क्लींश्रींक्लींश्रीं क्लींश्रींनमः, दक्षिणबाहुमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, कूर्प्परे, क्लींश्रींक्लींश्रींक्लींश्रींनमः, मणिबन्धे क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुलीमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुल्यग्रे क्लींश्रींक्लींश्रींक्लींश्रीं नमः, वामबाहुमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, कूर्प्परे क्लींश्रींक्लींश्रीं क्लींश्रींनमः, मणिबन्धे क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुलीमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुल्यग्रे क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षि

णोरुमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, जानुनि क्लींश्रींक्लींश्रींक्लींश्रीं नमः, गुल्फे क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुलीमूले क्लींश्रींक्लींश्रीं क्लींश्रींनमः, अङ्गुल्यग्रे क्लींश्रींक्लींश्रींक्लींश्रींनमः, वामोरुमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, जानुनि क्लींश्रींक्लींश्रींक्लींश्रींनमः, गुल्फे क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुलीमूले क्लींश्रींक्लींश्रींक्लींश्रींनमः, अङ्गुल्यग्रे क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षपार्श्वे क्लींश्रींक्लींश्रीं क्लींश्रींनमः, वामपार्श्वे क्लींश्रींक्लींश्रींक्लींश्रींनमः, पृष्ठे क्लींश्रीं क्लींश्रींक्लींश्रींनमः, नाभौ क्लींश्रींक्लींश्रींक्लींश्रींनमः, उदरे क्लींश्रीं क्लींश्रींक्लींश्रींनमः, हृदये क्लींश्रींक्लींश्रींक्लींश्रींनमः, दक्षांसे क्लींश्रींक्लींश्रींक्लींश्रींनमः, ककुदि क्लींश्रींक्लींश्रींक्लींश्रींनमः,वामांसे क्लींश्रींक्लींश्रींक्लींश्रींनमः, हृदयादक्षभुजाग्रान्तं क्लींश्रींक्लींश्रीं क्लींश्रींनमः, हृदयाद्वामभुजाग्रान्तं क्लींश्रींक्लींश्रींक्लींश्रींनमः, हृदयादक्षपादाग्रान्तं क्लींश्रींक्लींश्रींक्लींश्रींनमः, हृदादिवामपादाग्रान्तं क्लींश्रींक्लींश्रींक्लींश्रींनमः, हृदयान्मस्तकान्तं क्लींश्रींक्लींश्रींक्लींश्रींनमः ॥ इतितृतीयः ॥

## अथचतुर्थः ।

ललाटेह्रींश्रींह्रींश्रींह्रींश्रींनमः, मुखवृत्ते ह्रींश्रींह्रींश्रींह्रींश्रींनमः, दक्षनेत्रे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामनेत्रे ह्रींश्रींह्रींश्रींह्रीं श्रींनमः, दक्षकर्णे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामकर्णे ह्रींश्रींह्रीं श्रींह्रींश्रींनमः, दक्षनासायां ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामनासायां ह्रींश्रींह्रींश्रींह्रींश्रींनमः, दक्षगण्डे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामगण्डे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, ऊर्द्धोष्ठे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अधरोष्ठे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, ऊर्द्धदन्तपङ्क्तौ ह्रींश्रींह्रीं श्रींह्रींश्रींनमः, अधोदन्तपङ्क्तौ ह्रींश्रींह्रींश्रींह्रींश्रींनमः, शिरसि

ह्रींश्रींह्रींश्रींह्रींश्रींनमः, मुखे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, दक्षिण बाहुमूले ह्रींश्रींह्रींश्रींह्रींश्रींनमः, कूर्प्परे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, मणिबन्धे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गुलीमूले ह्रींश्रींह्रींश्रींह्रीं श्रींनमः, अङ्गुल्यग्रे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामबाहुमूले ह्रीं श्रींह्रींश्रींह्रींश्रींनमः, कूर्प्परे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, मणिबन्धे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गुलीमूले ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गुल्यग्रे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, दक्षिणोरुमूले ह्रींश्रींह्रींश्रीं ह्रींश्रींनमः, जानुनि ह्रींश्रींह्रींश्रींह्रींश्रींनमः, गुल्फे ह्रींश्रींह्रीं ह्रींह्रींश्रींनमः, अङ्गुलीमूले ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गुल्यग्रे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामोरुमूले ह्रींश्रींह्रींश्रींह्रींश्रींनमः, जा नुनि ह्रींश्रींह्रींश्रींह्रींश्रींनमः, गुल्फे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गु लीमूले ह्रींश्रींह्रींश्रींह्रींश्रींनमः, अङ्गुल्यग्रे ह्रींश्रींह्रींश्रींह्रींश्रीं नमः, दक्षिणपार्श्वे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, वामपार्श्वे ह्रींश्रींह्रीं श्रींह्रींश्रींनमः, पृष्ठे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, नाभौ ह्रींश्रींह्रींश्रीं ह्रींश्रींनमः, उदरे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, हृदये ह्रींश्रींह्रींश्रीं ह्रींश्रींनमः, दक्षांसे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, ककुदि ह्रींश्रींह्रीं श्रींह्रींश्रींनमः, वामांसे ह्रींश्रींह्रींश्रींह्रींश्रींनमः, हृदयाद्दक्षभुजा ग्रान्तम् ह्रींश्रींह्रींश्रींह्रींश्रींनमः, हृदयाद्वामभुजाग्रान्तम् ह्रींश्रीं ह्रींश्रींह्रींश्रींनमः, हृदयादिवामपादाग्रान्तम् ह्रींश्रींह्रींश्रींह्रींश्रीं नमः, हृदयान्मस्तकान्तम् ह्रींश्रींह्रींश्रींह्रींश्रींनमः ॥ इतिचतुर्थः

## अथ पञ्चमः ।

ललाटे मूलं ह्रांह्रांक्रंक्रंक्रूंनमः, मुखवृत्ते मूलं ह्रांह्रांक्रंक्रंक्रूं नमः, दक्षनेत्रे मूलं ह्रांह्रांक्रंक्रंक्रूंनमः, वामनेत्रे मूलं ह्रांह्रांक्रंक्रंक्रूं नमः, दक्षकर्णे मूलं ह्रांह्रांक्रंक्रंक्रूंनमः, वामकर्णे मूलं ह्रांह्रांक्रंक्रं

क्लूंनमः, दक्षनासायाम् मूलं ह्रांह्रांऋंऋंक्लूंनमः, वामनासायाम् मूलं ह्रांह्रांऋंऋंक्लूंनमः, दक्षगण्डे मूलं ह्रांह्रांऋंऋंक्लूंनमः वामगण्डे मूलं ह्रांह्रांऋंऋंक्लूंनमः ऊर्द्ध्वौष्ठेमूलं ह्रांह्रांऋंऋंक्लूंनमः, अधरोष्ठे मूलं ह्रांह्रांऋंऋंक्लूंनमः, ऊर्द्ध्वदन्तपङ्क्तौ मूलं ह्रांह्रांऋंऋं क्लूंनमः, अधोदन्तपङ्क्तौ मूलं ह्रांह्रांऋंऋंक्लूंनमः, शिरसि मूलं ह्रांह्रांऋंऋंक्लूंनमः, मुखे मूलं ह्रांह्रांऋंऋंक्लूंनमः, दक्षिणवाहुमूले मूलं ह्रांह्रांऋंऋंक्लूंनमः, कूर्प्परे मूलं ह्रांह्रांऋंऋंक्लूंनमः, मणिवन्धे मूलं ह्रांह्रांऋंऋंक्लूंनमः, अङ्गुलीमूले मूलं ह्रांह्रांऋंऋंक्लूंनमः, अङ्गुल्यग्रे मूलं ह्रांह्रांऋंऋंक्लूंनमः, वामबाहुमूले मूलं ह्रांह्रांऋंऋंक्लूं नमः, कूर्प्परे मूलं ह्रांह्रांऋंऋंक्लूंनमः, मणिवन्धे मूलं ह्रांह्रांऋंऋं क्लूंनमः,अङ्गुलीमूले मूलं ह्रांह्रांऋंऋंक्लूंनमः,अङ्गुल्यग्रेमूलं ह्रांह्रां ऋंऋंक्लूंनमः, दक्षिणोरुमूलेमूलं ह्रांह्रांऋंऋंक्लूंनमः, जानुनि मूलं ह्रांह्रांऋंऋंक्लूंनमः,गुल्फे मूलं ह्रांह्रांऋंऋंक्लूंनमः,अङ्गुलीमूले मूलं ह्रांह्रांऋंऋंक्लूंनमः, अङ्गुल्यग्रे मूलं ह्रांह्रांऋंऋंक्लूंनमः, वामोरुमूले मूलं ह्रांह्रांऋंऋंक्लूंनमः, जानुनि मूलं ह्रांह्रांऋंऋंक्लूंनमः,गुल्फे मूलंह्रांह्रांऋंऋंक्लूंनमः, अङ्गुलीमूलेमूलं ह्रांह्रांऋंऋंक्लूंनमः, अङ्गुल्यग्रे मूलं ह्रांह्रांऋंऋंक्लूंनमः, दक्षपार्श्वेमूलं ह्रांह्रांऋंऋंक्लूंनमः, वामपार्श्वेमूलं ह्रांह्रांऋंऋंक्लूंनमः, पृष्ठे मूलं ह्रांह्रांऋंऋंक्लूंनमः, नाभौ मूलं ह्रांह्रांऋंऋंक्लूंनमः, उदरे मूलं ह्रांह्रांऋंऋंक्लूंनमः, हृदये मूलं ह्रांह्रांऋंऋंक्लूंनमः, दक्षांसेमूलं ह्रांह्रांऋंऋंक्लूंनमः,ककुदि मूलं ह्रांह्रांऋंऋंक्लूंनमः,वामांसे मूलं ह्रांह्रांऋंऋंक्लूंनमः,हृदयादक्षपादाग्रान्तम् मूलं ह्रांह्रांऋंऋंक्लूंनमः, हृदयाद्वामभुजाग्रान्तम् ॥ मूलं,ह्रांह्रांऋंऋंक्लूंनमः हृदयादक्षपादाग्रान्तम् मूलं ह्रांह्रांऋंऋंक्लूं नमः, हृदादिवामपादाग्रान्तम् मूलं ह्रांह्रांऋंऋंक्लूंनमः, हृदयान्मस्तकान्तम् मूलं ह्रांह्रांऋंऋंक्लूंनमः ॥ इति पञ्चमः ॥

## अथ षष्ठः ।

ललाटे मूलंनमः,मुखवृत्ते मूलंनमः, दक्षनेत्रे मूलंनमः,वामने त्रे मूलनंमः, दक्षकर्णे मूलंनमः, वामकर्णे मूलंनमः, दक्षनासायां मूलंनमः, वामनासायां मूलंनमः, दक्षगण्डे मूलंनमः, वामगण्डे मूलंनमः, ऊर्ध्वोष्ठे मूलंनमः, अधरोष्ठे मूलंनमः, ऊर्ध्वे दन्तपङ्क्तौ मूलंनमः, अधोदन्तपङ्क्तौ मूलंनमः, शिरसि मूलंनमः, मुखेमूलंनमः दक्षिणबाहुमूलेमूलंनमः,कूर्प्परेमूलंनमः, मणिबन्धे मूलंनमः, अङ्गुलीमूलेमूलंनमः, अङ्गुल्यग्रेमूलंनमः, वामबाहुमू लेमूलंनमः, कूर्प्परेमूलंनमः, मणिबन्धेमूलंनमः, अङ्गुलीमूलेमू लंनमः, अङ्गुल्यग्रेमूलंनमः, दक्षिणोरुमूलेमूलंनमः, जानुनिमू लंनमः,गुल्फेमूलंनमः,अङ्गुलीमूलेमूलंनमः,अङ्गुल्यग्रेमूलंनमः, वामोरुमूलेमूलंनमः, जानुनिमूलंनमः, गुल्फेमूलंनमः, अङ्गुली मूलेमूलंनमः, अङ्गुल्यग्रेमूलंनमः, दक्षपार्श्वेमूलंनमः, वामपार्श्वे मूलंनमः, पृष्ठेमूलंनमः, नाभौ मूलंनमः, उदरेमूलंनमः, हृदये मूलंनमः, दक्षांसेमूलंनमः,ककुदि मूलंनमः, वामांसे मूलंनमः, हृदयाद्दक्षभुजाग्रान्तम् मूलं नमः, हृदयाद्वामभुजाग्रान्तम् मूलंनमः, हृदयाद्दक्षपादाग्रान्तम् मूलं नमः, हृदादिवामपा दाग्रान्तम् मूलं नमः, हृदयान्मस्तकान्तम् मूलंनमः,

इत्यनुलोमः ॥

## अथ विलोमः ।

हृदयान्मस्तकान्तम् मूलंनमः,हृदादिवामपादाग्रान्तम् मूलं नमः, हृदयाद्दक्षपादाग्रान्तम् मूलंनमः, हृदयाद्वामभुजाग्रान्तम् मूलंनमः, हृदयाद्दक्षभुजाग्रान्तम् मूलंनमः, वामांसे मूलंनमः,

ककुदिमूलंनमः,दक्षांसेमूलंनमः, हृदयेमूलंनमः, उदरेमूलंनमः, नाभौमूलंनमः,पृष्ठेमूलंनमः, वामपार्श्वेमूलंनमः, दक्षपार्श्वे मूलंन मः,अङ्गुल्यग्रेमूलंनमः, अङ्गुलीमूलेमूलंनमः, गुल्फेमूलंनमः,जा नुनिमूलंनमः, वामोरुमूलेमूलंनमः, अङ्गुल्यग्रेमूलंनमः, अङ्गुली मूलेमूलंनमः, गुल्फेमूलंनमः, जानुनिमूलंनमः, दक्षिणोरुमूले मूलंनमः, अङ्गुल्यग्रेमूलंनमः, अङ्गुलीमूलेमूलंनमः, मणिवन्धे मूलंनमः, कूर्प्परेमूलंनमः, वामबाहुमूलेमूलंनमः, अङ्गुल्यग्रेमूलं नमः, अङ्गुलीमूलेमूलंनमः,मणिबन्धेमूलंनमः, कूर्प्परेमूलंनमः, दक्षिणबाहुमूलेमूलंनमः, मुखेमूलंनमः, शिरसिमूलंनमः, अधो दन्तपङ्क्तौमूलंनमः, ऊर्द्ध्वदन्तपङ्क्तौमूलंनमः, अधरोष्ठेमूलंनमः, ऊर्द्ध्वोष्ठेमूलंनमः, वामगण्डेमूलंनमः, दक्षगण्डेमूलंनमः, वा मनासायांमूलंनमः, दक्षनासायांमूलंनमः, वामकर्णेमूलंनमः, दक्षकर्णेमूलंनमः, वामनेत्रेमूलंनमः, दक्षनेत्रेमूलंनमः, मुखवृत्ते मूलंनमः, ललाटेमूलंनमः, ॥ इति विलोमः ॥ अष्टोत्तरशत सङ्ख्यकमूलेनव्यापकन्यासंकुर्य्यादिति षष्ठः ॥

## अथ तत्त्वन्यासः ।

तद्यथा पादादिनाभिपर्य्यन्तं क्रींक्रींक्रींह्रींह्रींहूंहूंॐआत्म तत्त्वायनमः, नाभ्यादिहृदयपर्य्यन्तं दक्षिणेकालिकेॐविद्यात त्त्वायनमः, हृदादिशिरःपर्य्यन्तंक्रींक्रींक्रींह्रींह्रींहूंहूंस्वाहाॐशिव तत्त्वायनमः ॥

## अथ बीजन्यासः ।

तथाहि—ब्रह्मरन्ध्रेक्रींनमः, भ्रूमध्येक्रींनमः,ललाटेक्रींनमः ना भौह्रींनमः,गुह्येह्रींनमः,वक्त्रेहूंनमः,गुर्व्वङ्गेहूंनमः,इति ॥ इमौन्या

सौ ॥ क्रींक्रींक्रींह्रींह्रींहूंहूंदक्षिणेकालिकेक्रींक्रींक्रींह्रींह्रींहूंहूंस्वा
हा इतिविद्याबीजेन ततो मूलेन नवधा सप्तधा पञ्चधा व्यापक
न्यासङ्कुर्य्यात्॥ततोध्यानंकुर्य्यात्तद्यथा ॥करालवदनांघोरांमुक्त
केशीश्चतुर्भुजाम् ॥ कालिकांदक्षिणांदिव्याम्मुण्डमालाविभूषि
ताम् ॥ सद्यश्छिन्नशिरःखड्गवामोर्ध्वाधःकराम्बुजाम् ॥ अभयंव
रदञ्चैवदक्षिणाधोर्ध्वपाणिकाम् ॥ महामेघप्रभांश्यामांतथाचैव
दिगम्बराम् ॥ कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चिताम् ॥ कर्णा
वतंसतानीतशवयुग्मभयानकाम् ॥ घोरदंष्ट्राङ्करालास्याम्पीनो
न्नतपयोधराम् ॥ शवानाङ्करसङ्घातैःकृतकाञ्चीं हसन्मुखीम् ॥
सृक्कद्वयगलद्रक्तधाराविस्फुरिताननाम् ॥ घोररावाम्महारौद्रींश्म
शानालयवासिनीम् ॥ दन्तुरांदक्षिणव्यापिलम्बमानकचोच्चयाम्
॥ शवरूपमहादेवहृदयोपरिसंस्थिताम् ॥ शिवाभिर्घोररूपाभि
श्चतुर्दिक्षुसमन्विताम् ॥ महाकालेनचसमंविपरीतरतातुराम् ॥
एवंसञ्चिन्तयेद्देवींसर्व्वकामार्थसिद्धये ॥ ततः समस्तकिल्बिषरहि
तंनिर्म्मलंदेहंविचिन्त्यआत्मानंदेवीरूपंविभावयेत् ॥ अथ पी
ठदेवताया देहे पीठमयंविभावयेत्॥तद्यथा । आधारेमण्डूकायन
मः, स्वाधिष्ठाने कालाग्निरुद्रायनमः, नाभौकक्षपायनमः,हृदये
ॐआधारशक्तयेनमःकूर्म्मायनमःधरायैनमः सुधासमुद्रायनमः
कल्पवृक्षायनमः मणिहर्म्म्यायनमः हेमपीठायनमःइतिहृदयेन्य
सेत् ॥ दक्षबाहौधर्म्मायनमः, वामेज्ञानायनमः वामोरौवैराग्या
यनमः, दक्षोरौऐश्वर्य्यायनमः वदनेअधर्म्मायनमः, वामपा
र्श्वेअज्ञानायनमः, नाभौ अवैराग्यायनमः,दक्षिणपार्श्वेअनैश्व
र्य्यायनमःहृदि सं सत्त्वायनमःरंरजसेनमः,तंतमसेनमः,तपिन्या
दिकलाभ्योनमः,अमृतादिकलाभ्योनमः, धूम्रार्च्चिकलाभ्योनमः
आंआत्मनेनमः, अंअन्तरात्मनेनमः, पपरमात्मनेनमः, ह्रींज्ञा

नात्मनेनमः,मंमायातत्त्वायनमः, कंकलातत्त्वायनमः, विंविद्या तत्त्वायनमः, पंपरतत्त्वायनमः, श्मशानायनमः, मुनिभ्यो देवेभ्योनमः, बहुमांसास्थिमोदमानाभ्यः शिवाभ्योनमः, शवमुण्डचिताङ्गारेभ्योनमः ॐजयायैनमः ॐविजयायैनमः ॐ अजितायैनमः, ॐअपराजितायैनमः, ॐनित्यायैनमः ॐ विलासिन्यैनमः ॐदोग्ध्र्यैनमः ॐअघोरायैनमः, ॐमङ्गलायैनमः, ततः ह्सौंमहाप्रेतपद्मासनायनमः, एवंदेहमयंपीठं विभाव्य प्रातः कृत्योक्तप्रकारेणकुण्डल्युत्थानादि कृत्वा देवीं ध्यात्वा तत्तन्मुद्राः प्रदर्श्य मानसैरुपचारैः पूजयेत् ॥ तद्यथा ॥ मूलाधारेध्वजाधोगुदोर्ध्वे चतुःशोणपत्रे वंशंपंसमितिसहिते प्रसुप्तभुजगाकारांस्वयम्भूलिङ्गवेष्टिनींध्यायेत् ॥ तद्यथा ॥ध्यायेत्कुण्डलिनींसूक्ष्मांमूलाधारनिवासिनीम् ॥ प्रसुप्तभुजगाकारांविद्युत्पटलसन्निभाम् ॥ तामिष्टदेवतारूपांसार्द्धत्रिवलयान्विताम् । कोटिसौदामिनीभासांस्वयम्भूलिङ्गवेष्टिनीम् ॥तामुत्थाप्यमहादेवींहंसंमन्त्रेणसाधकः॥ उद्यद्दिनकरद्योतांयावच्छासन्दृढासनः ॥ अशेषाशुभशान्त्यर्थंसमाहितमनाश्चिरम् ॥ तत्प्रभापटलव्याप्तं शरीरमपिचिन्तयेत् ॥ सुषुम्नावर्त्मनैवैनांपरब्रह्मणियोजयेत् ॥ तत्रपरब्रह्मणिसङ्गमय्य ॥ ततश्चन्द्रमण्डलान्तर्गतामृतधारांनिपीय तया लोलीभूताञ्चैतन्यमयीञ्चरणयुगलान्तर्व्विगलितैरमृतनिवहैः प्रपञ्चंसिञ्चतीम्मूलाधारमानयेत्॥आत्मानंशुद्धचैतन्यानन्दमयंदेवतारूपंविभावयेत ॥ ततो मूलाधारात्कुण्डलिनीं हंसंमन्त्रेणोत्थाप्यद्वादशदलेहृदयसरसिजेपड्विन्दुलाञ्छितकादिचान्तसहितेगत्वाप्रदीपकलिकाकारजीवरूपांद्वितीयाम्प्रदीपकलिकामाकृष्यस्वमुखेनिः क्षिप्तवतीम्परब्रह्मणि सङ्गमय्य पुनर्हृदयदेशमानीय तन्मुखात्प्रदीपकलिकांविनिष्कृष्य मूलाधा

